चित् छोड़ कर भिन्न वस्तु और नहीं है कोय ।
भिन्न मात्र तो रूपनाम है जाने योगी कोय ॥

चित्तत्वभिन्नस्य न कस्यचित्स्या-
दस्तित्वमत्रेक्षितवस्तुनोऽपि ।
यन्नामरूपं भुवि भिन्नमात्रं
तद्वेत्ति कश्चिद्विरलो हि योगी ॥९२॥

---

चन्द्र सूर्य को एक करै जो योगी कहावे सोय ।
पंचकोश में वास जिसका वह तो भोगी होय ॥

चन्द्रस्य सूर्यस्य करोतु चैक्यं
यः कोऽपि योगी कथितः स एव ।
कोशेषु पञ्चस्वपि यस्य वासः
स एव भोगी गदितो मुनीन्द्रैः॥९३॥

---

शिव शक्ती जब एक घर आवे तभी कहावे योग ।
विषामृत का संयोग होवे नहीं तो वियोग ॥

एकत्र गेहे शिवशक्तिवासो
यदा भवेत्तं कथयन्ति योगम् ।

संयोग एवैष रवेस्तथेन्दो-
रतोऽन्यथा स्यान्नितरां वियोगः ॥१४॥

———*———

सोहं में हंसा समावे सोहं ही रह जाय।
श्याम श्यामा एक होय तो परमपद को पाय॥

सोहंपदे हंसपदे विलीने
सोहंपदं स्यादवशिष्टमेव।
स्याच्छ्यामयोरेव यदैकताऽसौ
प्राप्नोति दिव्यं परमं पदं तत् ॥१५॥

———❀———

राधाकृष्ण व श्याम श्यामा भिन्न कभी नहीं होय।
दोनो को जो एक जाने योगी कहावे सोय॥

श्यामापदं श्यामपदं च राधा
कृष्णो न भिन्नं मिथुनं कदाचित्।
ऐक्यं द्वयोर्यः परिवेत्ति जीवः
स एव योगी गदितो मुनीन्द्रैः ॥१६॥

———❀———

१विषमार्गो रवेर्भागः सोमभागोऽमृतं स्मृतम्। इति याज्ञवल्क्यः।

शब्द ब्रह्म ओंकार को घट घट में पहिचान ।
वही तो है भगवती और वही भगवान ॥

शब्दात्मकब्रह्मण ओंपदस्य
घटे घटे व्यापकतामवेहि
ब्रह्मैव शक्ति र्भगवत्यचिन्त्या
ब्रह्मैव नूनं भगवांस्तदस्ति ॥१७॥



श्याम श्यामा दुई नहीं हैं एक ही चित् को मान ।
चैतन्य और चेतनशक्ती सोहं शब्द से जान ॥

श्यामापदं श्यामपदं न भिन्नं
द्वयं सदा विद्धि चिदेकतत्त्वम् ।
चिद्ब्रह्म या चेतनशक्तिरस्ति
जानीहि सोहंपद एव दिव्ये ॥१८॥



'सो' शब्द में चेतन शक्ती 'हं' मे चैतन्य होय ।
'सोहं' शब्द में श्याम श्यामा जाने योगी सोय ॥

'सो' वाचके चेतनशक्तिरस्ति
'हं' वाचके चित्पदमस्ति दिव्यम् ।

श्यामापदं श्यामपदं च सोहं-
पदे विजानाति सदैव योगी ॥९९॥

श्यामा ही तो गुरू उनका चरण है ओंकार ।
प्राण मन से चरण धरके उतरो भवजल पार ॥

श्यामा गुरुर्भवति तस्य गुरुर्गुरूणा-
मोङ्कार एव चरणो दिवि वर्तमानः ।
प्राणैश्च शुद्धमनसा चरणं गृहीत्वा
पारं व्रजेन्मुनिजनो भवसागरस्य ॥१००॥

श्रीराममूर्तिकविनैवमनूदितोऽयं
पौराणिकेन सुखागनवद्यपद्यैः
श्रीपूज्यपादगुरुवर्य्यकृपाकटाक्षा-
द्भागःसमाप्तिमगमद्गतिदो द्वितीयः ॥२॥

❀ समाप्तोऽयं द्वितीयो भागः ❀

प्रथमभागे ४० श्लोके तृतीयचरणे विनाऽसौ, इत्यस्य स्थाने न मुक्त्वा, इति पाठः कार्यः । अथवा काका व्याख्येयः ।

# द्वितिय भाग परिशिष्टांश

सब में एक व एक ही में सब है
जिन खोजा तिन पाया है ।
वही एक तो तुमही आप हो
नहीं खोजा नहीं पाया है ॥

एकत्र सर्वमखिलेष्वपि तत्त्वमेकं
यस्तज्जनो मृगयते लभते स नित्यम् ॥
त्वं तत्त्वमेकमसि तत्स्वमेव जीव
प्राप्नोति नैव यदि मार्गति नात्र कश्चित् ॥१॥

---

इदानीं द्वितीयभागपरिशिष्टांशेन कतिपयहिन्दीपद्यैरसंप्रज्ञातसमाधिं निरूपयन्ति पूज्यपादाः। संप्रति पद्यानि व्याख्यातुं तेषामादेशो नास्ति यतस्ते कथयन्ति प्राप्तदीक्षो जनोऽन्तर्गतिं कृत्वा "ददामि बुद्धियोगं तम्" इति भगवतः सकाशाल्लब्धबुद्धिः सन्स्वयमेव सर्वमन्तर्गूढरहस्यं ज्ञास्यत्येव, अन्तर्गतिशून्यास्तु भावप्रकाशेनापि ज्ञातुमशक्ता यतोऽयुक्तत्वात्तेषां बुद्धिर्नास्ति भगवान्युक्तेभ्यो बुद्धिं ददाति नत्वयुक्तेभ्यः। एवञ्च शक्तिसंचाररूपां दीक्षां विनाऽन्तर्गतिर्न स्यादन्तर्गतिं विना युक्तो न स्यात् युक्तत्वाभावाद्बुद्धिदानं न स्याद् बुद्धेरभावाद्गूढरहस्यवेत्ता न स्यादतस्तेषां कृते भावप्रकाशोऽपि व्यर्थप्राय एव। भगवता प्रोक्तं

युक्तत्वलक्षणमेकांशेनापि तेषु न घटते । 'यदा विनियतं चित्तमात्मन्येवाऽवतिष्ठते । निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा" इति । पद्यार्थस्तु गूढोऽतो ग्रन्थविस्तरभिया नोल्लिख्यते । इदमेवाऽऽदेशाभावे कारणम् । तथापि केवलमनुमानंकारयितुं चरणद्वयेन संक्षेपतो गूढरहस्याभासमात्रमुद्घाटयिष्यामः । एकत्रेति । अखिलेषु, एकं तत्त्वमित्यन्वयः । अखिलेषु सर्वपरमाणुषु । लोहितशुक्लकृष्णवर्णात्मकेषु सर्वशून्येष्वित्यर्थः । वर्णत्रयं च क्रमतो रजःसत्त्वतमसां गुणत्रयाणां गुणत्रयात्मिका तु प्रकृतिरतस्तस्या अपि तत्रैवाधिष्ठानं बोध्यम् । "मण्डलत्रयभूषितामि"त्युक्तेः । प्रकृतेश्च त्रयोविंशतितत्त्वानामुत्पत्तिस्तेषां जडत्वाद्बहिरन्तश्चिदधिष्ठानम् । "बहिरन्तश्च भूतानामचरं चरमेव च । सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्" इति गीतोक्तेः । "कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः । त्रयोविंशतितत्त्वानां गणं युगपदाविशत्" । "सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम्" इति भागवतोक्तेश्च । एवञ्चानुलोमरीत्या सृष्टौ सर्वेष्वेकं तत्त्वमिति सिद्धम् । "यत्प्रयन्त्यभिसंविशन्ति" इति श्रुत्या विलोमरीत्या प्रळये, एकस्मिन्नेव सर्वमित्यपि सिद्धम् । तथा च भगवद्वाक्यम् "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि" इति । शून्यानां लोहितशुक्लकृष्णत्वन्तु "अजामेकां लोहितशुक्लकृष्णाम्" इति श्रुत्या सिद्धम्, केवलं सिद्धमित्यनेनैव श्रुतेश्चारितार्थ्यं न स्यादपि च प्राप्तदीक्षा जनास्तत्क्षणादेव सर्वत्र व्याप्तं शून्यमवलोकयन्तीति निष्प्रपञ्चम् । यो जनस्तत्तत्त्वं मृगयतेऽन्विष्यति स नित्यमवश्यमेव लभते, इत्यन्वयः । अन्वेषणं तु अन्तः शरीरे एव स्यान्न तु बहिः । उक्तञ्च भागवते-"अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः" । सन्तोऽन्तर्भवे एव भवन्तं मृगयन्ति एवशब्देन बहिरन्वेषणव्यावृत्तिः सूचिता । किं कुर्वन्तः । अतत्त्यजन्तः । इदं ब्रह्म न, इदं ब्रह्म नेति

विचार्य जगत्त्यजन्तः। अयं भावः। मेरुदण्डान्तर्गतसुषुम्नानाड्यां चक्राणि वर्तन्ते सर्वेषामधस्तान्मूलाधारचक्रेऽन्नमयःकोषस्तत्र पृथिवीतत्त्वं वर्तते। तत्रैव जीवो लिङ्गरूपेण भ्रमति "अधोमुखो लिङ्गरूपो हेमाभो भ्रमणे रतः" इति तन्त्रोक्तेः। अधुनाऽपि स नाभेरुपरि हंसप्रवाहे वर्तमानस्येश्वरस्य प्राप्त्यर्थं मूलाधारान्नाभिचक्रपर्यन्तमायाति किन्तु नाभिचक्रे वर्तमानः समानो वायुरपानस्थितजीवस्य प्राणवायुस्थेश्वरस्य च परस्परसम्मेलने बाधां करोति। यद्यपि "येन मार्गेण गन्तव्यं ब्रह्मद्वारं निरामयम्। मुखेनाऽऽच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी" इति तन्त्रोक्तेर्मातृगर्भान्निष्क्रान्तस्य जीवस्य पिङ्गलायां गतिमत्त्वात्सुषुम्नाख्यस्य ज्ञानमार्गस्य च रुद्धत्वान्नाभिचक्रपर्यन्तगमनमसंभावितं तथापि नाभिचक्रस्य दक्षिणवामावर्तयोर्भ्रमणाद् दक्षिणावर्ते पिङ्गलायां वामावर्ते चाऽव्यक्तभावेन सुषुम्नायां गतिमत्त्वान्नास्ति पूर्वोक्तदोषः।

यदि गुरुकृपया दीक्षा स्यात् अर्थाद् हंससोहंप्रवाहयोरेकीभावः स्यादर्थात् "प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ" इति भगवद्वाक्यानुसारेण प्राणापानयोरेकगतिः स्यात्तदाऽधोनिर्दिष्टरीत्या समानवायोर्भेदो भवति, तथा च—नीचैः स्थितो जीव ऊर्ध्वगत्या इदं ब्रह्म नेति विचार्य पृथिवीतत्त्वं त्यजति, अर्थात् "मूलाधारचक्रं भिनत्ति, तदुपरि क्रमतः स्वाधिष्ठानचक्रे जलतत्त्वं प्राप्येदं ब्रह्म नेति विचार्य जलतत्त्वं त्यजति अर्थात् स्वाधिष्ठानचक्रं भिनत्ति, तदुपरि मणिपूरचक्रे तेजस्तत्त्वं प्राप्येदं ब्रह्म नेति विचार्य तेजस्तत्त्वं त्यजत्यर्थान्मणिपूरचक्रं भिनत्ति। तदुपरि वर्तमानेऽनाहतचक्रे वायुतत्त्वं प्राप्येदं ब्रह्म नेति विचार्य वायुतत्त्वं त्यजति, अर्थादनाहतचक्रं भिनत्ति, तदुपरि विशुद्धाख्ये चक्रे आकाशतत्त्वं प्राप्य, इदं ब्रह्म नेति विचार्याऽऽकाशतत्त्वं त्यजति–अर्थाद् विशुद्धाख्यचक्रं भिनत्ति, एवंरीत्या पाञ्चभौतिकं जगत्त्यजन्पञ्चकोषाद्बहिर्गतो जीवः षष्ठं मायाचक्रं

च भित्त्वा भूर्भुवः स्वः, इति लोकत्रयं त्यजन् ब्रह्मलोकं गच्छन् सोहं-गतिं कुर्वन्नर्थात्प्रणवमुच्चारयन्। "ततः पश्चात्प्रणवोऽसौ महामनुः" इति तन्त्रोक्तेः, पुनः संवेशयेत्स्वरम्" इत्येकादशोक्तेश्च। पुनराज्ञा-चक्रे स्थितो योगी संप्रज्ञातसमाधिमापन्नः परमात्मतत्त्वं पश्यति पश्यन्पश्यंस्तदपि चक्रं भित्त्वा सहस्रारप्रवाहमवाप्य "ब्रह्मविद् ब्रह्मैव भवति" 'एकमेवाऽद्वितीयम्'इत्यादि श्रुतिशिरोवाक्यान्यालो-चयन्विज्ञानवान् सन्नसंप्रज्ञातसमाधिस्थितो भवतीति अतत्त्यजन्त इति भागवतीयपद्यस्य गूडोऽभिप्रायो नास्ति सर्वेषां बोधगम्यः। अनयैव रीत्या संसारनिवृत्तिपूर्विका स्वरूपावाप्तिः अर्थादपरोक्षानु-भूतिर्भवति। न केवलं वेदान्तिनां "सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन"इति कथनमात्रेण। उक्तोपायं विहाय नान्यः कश्चनोपाय इत्यत्र श्रुतिः प्रमाणम्। "नान्यः पन्था वर्ततेऽयनाये"ति गम्भीरो मूलाशय इत्यवधेयम्। आधुनिकास्तु योगनामोच्चारणेनैव पला-यन्ते ते योगरहस्यानभिज्ञा एव। "भगवता तस्माद्योगी भवार्जुने"-त्युपदिश्य राजविद्येति श्लोके योगसाधनं प्रत्यक्षानुभूतिजनकं दर्शयता 'सुसुखं कर्तुमव्ययमि'ति पद्येन नास्ति योगसमः सरलोपाय इति सूचितम्। योगसाधने गृहाश्रमोऽपि बाधको नेति विषये भाग-वतीयं पद्यं स्मर्तव्यम्—"गृहेषु निर्विश्य यतेत पूर्वमि"ति। अन्यथा राज्ये स्थितस्य जनकस्य विदेहता न स्यादेवञ्च वासना एव संसार-स्तत्त्यागस्त्याग उच्यते, त्यागस्त्वनयैव रीत्येति विचार्य समस्त-शङ्काकलङ्को निःशेषं शंशम्यते। एवं पूज्यचरणानां सर्वाणि पद्यानि गूढाभिप्रायकाणि नान्तर्गतिशून्यानां बोधगम्यानीति दिङ्मात्र-मत्र प्रादर्शीति दिक्।

**जड़ चेतन को मान लेकर**
**ख्याल में दोनों पाया है।**

अपने आप को ख्याल हुआ जब
आप ही आप को पाया है ॥

तच्चेतनं जडमिदं द्वयमत्र मत्वा
स्वप्नोपमो भवति भिन्नपदार्थबोधः ।
दैवाद्यदा स्मरति रूपमिहात्मना स्वम्
आत्मानमेव लभते स्वयमेष जीवः ॥२॥

तदिति । अत्र शरीरे चेतनं सोऽहंप्रवाहात्मकं जडं हंसप्रवाहात्मकं द्वयं मत्वा संकल्प्य स्वप्नतुल्यं द्वैतज्ञानं भवति। जीवस्य रजोगुणे गतिमत्त्वाद्द्वैतस्य स्वप्नोपमत्वं स्पष्टमेव। "रजसास्वप्नमादिशेत्" इति भागवतोक्तेः । स्वं रूपमित्यन्वयः ।

आगे पीछे एक हम ही हैं बीच में हम तुम दोनों हैं।
हम तुम जब एक हुए तब हम तुम दोनौ हम ही हैं॥

सृष्टेः पुरान्तसमयेऽस्म्यहमेकरूपो
मध्येऽस्त्यहं त्वमिति वा व्यवहारभेदः ।
एकात्मकं द्वयमिदं यदि दैवयोगा-
देकोऽस्म्यहं त्वमहमत्र मिथो मिलित्वा ॥३॥

सृष्टेरिति । सृष्टेः पुराऽन्तसमये च, अहमेकरूपोऽस्मि। आज्ञाचक्रात्सहस्रारपर्यन्तो यो विकर्मसंज्ञकः प्रवाहस्तत्प्रवाहस्थत्वादित्यर्थः। मध्ये शब्दप्रवाहमध्ये। अहं त्वं, च इति व्यवहारतो

भेदः। विशेषेण, अव नीचैर्हरणं कर्षणं व्यवहारः। यदि, अत्र शरीरे दैवयोगादहं त्वं, इदं द्वयं पदं चिच्चिदाभासरूपं मिथः परस्परं मिलित्वा। प्रतिबिम्बात्मकस्याऽधःशून्यस्योपरि बिम्बस्थ-शून्ये लयादित्यर्थः। एकात्मकं स्यात्तर्हि, अहमेकोऽस्मीति संक्षेपः।

**हम और तुम तो दुई नहीं हैं शब्द ही में तो हम तुम हैं।**
**वही शब्द तो ओंकार है जिससे सारा पसारा है ॥**

**त्वय्यस्ति मय्यपि न कुत्सितभेदशङ्का**
**शब्दादहं त्वमिति वा व्यवहार एषः।**
**शब्दः स एव गदितः प्रणवस्वरूपो**
**लोकद्वयस्य विविधोऽस्ति यतः प्रसारः ॥४॥**

त्वयीति। त्वयि चिदाभासे मयि चिति। शब्दः प्रणवस्वरूपः। स च प्रणवः पञ्चात्मकः। अकारोकारमकारनादबिन्दुरूपः। "अश्च उश्च मकारश्च नादो बिन्दुश्च पञ्चमः" इति काशीखण्डोक्तेः। यतः प्रणवात् लोकद्वयस्य, अन्तर्जगतो बहिर्जगतश्च। "अन्तःपुरुषरूपेण कालरूपेण यो बहिः" इति भागवतोक्तेः। विविधोऽनन्त एकरूपश्च प्रसारो विस्तरः। क्रमतो हंसप्रवाहे सोऽहंप्रवाहे चेत्यर्थः।

**जब तक शब्द है तब तक सब कुछ है**
**शब्द नहीं तो कुछ भी नही है।**
**ॐकार को चढ़ा लिया तो**
**आप ही आप अकेला है ॥**

शब्दोऽस्ति यावदिह तावदनन्तमेकं

शब्दस्य किञ्चिदपि नात्र भवत्यभावे ।

उत्थापयेत्प्रणवमूर्ध्वमिमं विकृष्य

स्यादेककः स पुरुषः स्वयमात्मभूतः ॥५॥

शब्द इति । शब्दः शब्दप्रवाहः । अनन्तं हंसप्रवाहे । एकं सोऽहंप्रवाहे । मायाचक्रान्नाभिचक्रपर्यन्तो हंसप्रवाहः । आज्ञाचक्रान्मायाचक्रपर्यन्तः सोऽहंप्रवाह इति विवेचनीयम् । शब्दस्याऽभावे किञ्चिदपि चिज्जडं वा नास्ति । उभयोः सङ्कलिपतत्वादिति भावः । इमम् , अन्तःस्थितमोङ्कारमाकृष्य, ऊर्ध्वम्, अनाहतादिचक्रेपूत्थापयेत् । एवं कृते सति स योगी पुरुषः स्वयमात्मभूतः सन्नेक एक स्यादित्यन्वयः । उक्तञ्च भागवते—"हृद्यविच्छिन्नमोङ्कारं घण्टानादं विसोर्णवत् । प्राणेनोदीर्य तत्राऽथ पुनः संवेशयेत्स्वरम्" इति ।

जब तक खेल है तब तक सब कुछ है

हार जीत भी दोनौ है ।

खेल खतम तो सब कुछ खतम

हार जीत सब झूठी है ॥

मायाविलासपर्यन्तमनन्तमेकं

द्वैतप्रतीतिरपि चिज्जडबोधरूपा ।

मायाद्वयाद्यदि बहिः सकलं समाप्तं

बन्धस्तथा चिदुपलब्धिरतीव मिथ्या ॥६॥

मायेति । मायाविलासपर्यन्तम् । हंससोहंप्रवाहपर्यन्तमित्यर्थः। अनन्तं नाम रूपञ्च हंसप्रवाहे। एकं शब्दब्रह्म सोऽहंप्रवाहे। "ब्रह्मादितृणपर्यन्तं मायया कल्पितं जगत्। सत्यमेकं परब्रह्म विदित्वैव सुखी भवेत्" इति तन्त्रोक्तेः। अस्यैव विवरणं–द्वैतप्रतीतिरिति। उभयोर्बहिः स्वरूपावस्थितो भूत्वा स्वात्मलाभं कुर्यात्। तथा च योगसूत्रम् "तदा द्रष्टुः स्वरूपावस्थानम्"। बन्धस्य चिदुपलब्धेश्चाभावादित्यर्थः। "बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः। गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्" इति भागवतोक्तेः।

**बात ही में सब कुछ बात ही में हार जीत**
**बात ही में हँसना रोना है।**
**बात ही तो शब्द है व शब्द ही तो ओंकार है**
**गूँगा होय तो कुछ भी नहीं है॥**

**सर्वं तथैकमजयो विजयश्च शब्दे**
**दुःखानुभूतिरपि चात्र सुखानुभूतिः।**
**शब्दात्मकः प्रणव ईरितमस्ति शब्दः**
**शब्दादतीतपदभाग्यदि नास्ति किञ्चित्॥७॥**

सर्वमिति। शब्दे शब्दप्रवाहे सर्वमनन्तं तथैकम्। तत्र हंसाख्ये शब्दप्रवाहे। अजयो जडबोधत्वात्। विजयः सोऽहंप्रवाहे चैतन्यबोधत्वात्। अस्यैव विवरणं—दुःखानुभूतिरिति। सा तु, आद्ये। सुखानुभूतिः। अन्ते। ईरितं कथनं तच्च वार्तारूपमेव। भावे क्तः। शब्दातीतपदम्। आज्ञाच सहस्रारचक्रपर्यन्तम्।

सब व कुछ तो अनन्त एक है माया ब्रह्म तो वही है।
अनन्त रूप नाम एक आत्मा दोनौ शून्य ही शून्य हैं॥

मायाऽस्त्यनन्तपदगोचरशक्तिरूपा
ब्रह्मैव किञ्चिदभिधायकमेकतत्त्वम् ।
रूपं च नाम विविधं जगदेक आत्मा
सिद्धान्ततो भवति शून्यमिदं समस्तम्॥८॥

मायेति। अनन्तपदगोचरा नामरूपविषयिणी या शक्तिस्तत्स्वरूपा-हंसात्मिका माया। किञ्चिदभिधायकं किञ्चित्पदप्रतिपादकं सोऽहमात्मकं ब्रह्म। जगत्; अन्तर्जगत्। एक आत्मा। "अयमात्मा ब्रह्म" इति श्रुतेः। वस्तुतः सर्वं शून्यमेव। तस्य ज्ञानं तु दीक्षां विना न स्यात्। "सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्" इति गीतोक्तेः।

जहाँ शून्य वहाँ शब्द है
जहाँ शब्द वहाँ बात है।
जहाँ बात वहाँ सब कुछ है
बात नहीं तो कुछ भी नहीं है॥

शून्याऽस्तिता भवति यत्र स तत्र शब्दः
शब्दाऽस्तिता भवति तत्र सदैव वार्ता।
वार्ताऽस्तिता भवति तत्र समस्तमेकं
वार्ता विना न चिदचित्किमपोह वस्तु॥९॥

शून्येति। यत्र शून्याऽस्तिता शून्यास्तित्वं तत्र शब्दो भवति शून्यस्याऽऽधारत्वं शब्दस्याधेयत्वं स्पष्टमेव। यत्र शब्दस्याऽस्तित्वं तत्र वार्ता वागारम्भः। समस्तमनन्तम्।

शून्य से धुन व धुन से शब्द,
व शब्द ही तो बात है।
धुन व शब्द तो दोनौ शून्य हैं,
शून्य ही में तो ॐकार है॥

शून्याद्ध्वनिर्ध्वनिविनिर्गत एव शब्दः
शब्दात्मिका भवति वाक्सरणिर्विचित्रा।
शून्यात्मकं द्वयमिदं ध्वनिरस्ति शब्दः
शब्दात्मकः स प्रणवोऽत्र शरीरमध्ये॥१०॥

शून्यादिति। शून्याद् विन्दुरूपात्। आज्ञाचक्रस्थत्वादिति भावः। ध्वनिर्नादः। ध्वनिविनिर्गतः शब्दो वर्णात्मकः। शब्दो ध्वनिश्च इदं द्वयं शून्यात्मकं शून्यस्वरूपमस्ति। शब्दात्मकः स प्रणवोऽत्र शरीरमध्य एवेत्यन्वयः।

अनाहत शब्द ॐकार में मन ही का सब पसारा है।
मन के लय से सब लय होवै ॐकार तब कहाँ है॥

शब्दोऽस्त्यनाहत इह प्रणवो विचित्रः
सर्वात्मनाऽत्र मनसो विविधः प्रसारः।
लीने मनस्यखिलवस्तु यदा विलीनं
शब्दात्मकः स प्रणवोऽपि गतस्तदोर्ध्वम्॥

शब्द इति। इह शरीरे। अनाहतोऽनाहताख्यः शब्दः प्रणव ओङ्कारोऽस्ति। कथंभूतः। विचित्रः सूत्ररूपत्वात्। "विसोर्णवत्" इति भागवतोक्तेः। अत्र प्रणवे सर्वात्मना सर्वप्रकारेण मनस इच्छाशक्तेर्विविधोऽनन्तः। जडचैतन्यरूप इत्यर्थः। प्रसारो विस्तरः। "सर्वं जातं जायमानमोङ्कारेऽत्र प्रतिष्ठितम्। तस्मादोङ्कारजापी यः स मुक्तो नाऽत्र संशयः" इति तन्त्रोक्तेः। मनसि लीने यदाऽखिलवस्तु विलीनं तदा शब्दात्मकः प्रणवोऽप्यूर्ध्वं गतः। अकार उकारे गतः उकारो मकारे गतः, मकारो नादे गतः, नादो बिन्दौ गतः, बिन्दुश्चिति गत इति विवेचनीयम्।

**शून्य ही में तो शब्द है और ॐकार ही तो शब्द है।**
**व्यक्त व अव्यक्त होवे यही तो मन का खेल है॥**

**शब्दोऽत्र शून्यमधिकृत्य विराजमानः**
**शब्दो बुधैर्निगदितः प्रणवस्वरूपः।**
**अव्यक्तता यदि समा प्रकृतेरवस्था**
**व्यक्तत्वमस्य विषमैष मनोविलासः॥१२॥**

शब्द इति। अत्र शरीरे शून्यं शून्यप्रवाहमधिकृत्य शब्दो विराजते। यदि प्रकृतेर्गुणत्रयात्मिकायाः समाऽवस्था साम्यावस्था स्यात्तदाऽस्याऽव्यक्तता। यदि च प्रकृतेर्विषमा वैषम्यावस्था स्यात्तदाऽस्य शब्दस्य व्यक्तत्वम्। वस्तुतस्त्वेष मनोविलास इत्यन्वयः।

**शून्य छोड़ के कुछ भी नहीं है,**
**हर एक शून्य में हम ही हैं।**
**सिवाय हमारे दूसरा कौन है,**
**हम ही सर्वव्यापक हैं॥**

शून्यं विहाय नहि किञ्चिदपीह वस्तु
प्रत्येकशून्यमवलम्ब्य गतोऽहमन्तः ।
मत्तो न कश्चिदितरः प्रतिभाति, सर्वं
व्याप्नोम्यहं खलु चराचरमेकरूपः ॥१३॥

शून्यमिति। किञ्चिदपि वस्तु नास्ति किन्तु शून्यमेव। तस्य सर्वत्र व्याप्तत्वादिति भावः। उक्तञ्च – "अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः"। अवलम्ब्याऽऽश्रित्य। अन्तर्गतोऽन्तःप्रविष्ट। मत्तोऽन्यः कश्चिदपि न प्रतिभाति। सर्वमित्युत्तरान्वयि। उक्तञ्च—भागवतीये द्वितीयस्कन्धे—'अहमेवाऽऽसमेवाग्रे नान्यद्यत्सदसत्परम्। पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्'इति॥

"सर्वं खल्विदं ब्रह्म" जाको वेद वेदान्त सब कहत हैं।
वही ब्रह्म तो एक हमही हैं और नहीं कोई दूजा है॥

ब्रह्मेदमेव सकलं जगदस्ति वेदा
वेदान्तशास्त्रनिचयाः प्रतिपादयन्ति ।
तद्ब्रह्म नूनमहमस्मि सदेकरूपं
कश्चिद्द्वितीयपदभाङ् न भवेत्कदापि ॥१४॥

ब्रह्मेति। इदं सकलं जगद्ब्रह्मैव, इति वेदा वेदान्तशास्त्रकदम्बाश्च निरूपयन्ति। "ब्रह्मैवेदं जगत्सर्वं नेह नानाऽस्ति किञ्चन" इतिश्रुतेः। "इदं हि विश्वं भगवान्"—इति भागवतोक्तेश्च। सत्, नित्यम्,

एकरूपं तद्ब्रह्म नूनमहमस्मि। द्वितीयपदभाक्कश्चिदपि न। "द्विती-याद्वै भयं भवति" इति श्रुतेः। भयं द्वितीयाभिनिवेशतः स्यात्" इति भागवतोक्तेश्च। एवञ्चाऽद्वैतपक्ष एव सर्वसम्मतः।

सब कुछ खोजा सब कुछ पाया
अन्त कुछ नहीं पाया है।
जब पाया तो आप ही को पाया
आप ही को तो खोया है॥

**मार्गत्यनन्तमिदमेकमनन्तमेकं**
**प्राप्नोत्यथापि लभते नहि किञ्चिदन्ते।**
**लाभं करोति यदि तर्हि निजात्मनोऽसौ**
**विस्मृत्य रूपममलं स यतः स्वमास्ते॥१५॥**

मार्गतीति। साधनावस्थायां योगी। अनन्तं जडं, एकं चैतन्यञ्च। मार्गति, अन्विष्यति। हंससोऽहंप्रवाहयोरित्यर्थः। न तु बहिः। पुनर्द्वयमपि प्राप्नोति। अथाप्यन्ते स्वरूपावस्थाने किञ्चिदपि चिज्जडं न लभते। तयोर्मायात्मकत्वादित्यर्थः। उक्तञ्च-'भागवते'-ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चाऽऽत्मनि। तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः" इति। असौ योगी यदि लाभं करोति तर्हि निजात्मन एव। यतः सोऽमलं दिव्यं स्वं रूपं विस्मृत्याऽऽस्ते।

सब कुछ पाया आपको खोया
नहीं पाया नहीं खोया है।

पाना खोना दोनों भ्रम ही है
बात ही में पाना खोना है ॥

स्वास्फूर्तिरेव यदि चिज्जडबोधवान्स्या-
न्नो विस्मृतिर्यदि स चिज्जडबोधशून्यः ।
स्वस्याऽस्मृतिश्चिदुपलब्धिरिति भ्रमो हि
शब्दप्रवाहगतितः पृथगेष बोधः ॥१६॥

स्वेति । यदि चिज्जडबोधवान् सोऽहंहंसप्रवाहगामी स्यात्तदा स्वास्फूर्तिः स्वरूपविस्मृतिः । यदि स चिज्जडबोधशून्यः प्रवाहद्वयगतिशून्यस्तदा नो विस्मृतिः न स्वरूपविस्मृतिः । ब्रह्मणि प्रतिष्ठानादिति भावः । "एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति" इति गीतोक्तेः । वस्तुतः स्वस्य रूपस्याऽस्मृतिर्विस्मृतिश्चैतन्योपलब्धिश्च भ्रमः । हि यतः पृथग्बोधः शब्दप्रवाहे या गतिर्गमनं तस्माद्भवतीति शेषः ।

गुरुवाक्य को मान लेकर अपना काम जो साधा है ।
घर पहुँच कर देखे तब तो आप ही आपको पाया है ।

हंसात्मकं गुरुवचो यदि कल्पयित्वा
कुर्यादधः पतनमूर्ध्वगतिं स्वकर्म ।
तर्हि क्रमात्सकलचक्रपदानि भित्वा
स्वात्मानमेव स लभेत गुरोः कृपातः ॥१७॥

हंसेति। हंसात्मकं हंसमन्त्रात्मकं गुरुवचः शून्यसूत्ररूपं कल्पयित्वा सङ्कल्प्य। उक्तञ्च पुराणादौ—"शिवादिक्रिमिपर्यन्तं प्राणिनां प्राणवर्त्मनः। निःश्वासोच्छ्वासरूपेण मन्त्रोऽयं वर्तते प्रिये"। "सः कारेण बहिर्याति हंकारेण विशेत्पुनः। हंस हंसेति मन्त्रं वै जीवो जपति सर्वदा"इति। अधः पतनं संचारः। ऊर्ध्वगतिः प्रत्याहारः। तथा च योगसूत्रं—"प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" इति। इदमेव स्वकर्म यदि कुर्यात्। गीतायामपि "कुरु कर्मैव तस्मात्त्वम्" इत्यनेनेदमेव कर्म दर्शितं न तु बाह्यम्। प्राणगतिं बिना-बाह्यकर्मकरणस्याऽशक्यत्वादिति भावः। सकलचक्रपदानि मूलाधारादीनि भित्त्वा स जीवः स्वात्मानमात्मस्वरूपं लभते। कस्माद् गुरोः कृपातः। "मोक्षमूलं गुरोः कृपा"इत्युक्तेः।

**गुरु चेला हम और तुम यह सब शब्द ही का पसारा है।**
**शब्द नहीं तो कुछ भी नहीं हम और तुम तब एक ही हैं॥**

**शिष्यो गुरुस्त्वमहमित्यखिलः प्रसारः**
**शब्दात्मकस्य गदितः प्रणवस्य लोके।**
**शब्दाऽस्तिता यदि न तर्हि समस्तमस्तं**
**त्वं वाऽहमस्मि मिलितो मिथ एकरूपः॥ १८॥**

शिष्य इति। शिष्यस्त्वं जीवरूपः। हंसप्रवाहे। गुरुः शब्द-ब्रह्म, अहं सोऽहंप्रवाहे। अखिलः प्रसारो जडचैतन्यरूपो विस्तरः लोके भूरादित्रये शब्दात्मकस्य शून्यात्मकस्य प्रणवस्योङ्कारस्य गदितः। योगिभिरिति शेषः। "विसोर्णवत्" इति भागवतोक्तेः। यदि शब्दाऽस्तिता शून्यात्मकप्रवाहद्वयस्याऽस्तित्वं न तर्हि समस्तमनन्तमेकञ्च, अस्तं नष्टम्। तथा सति अहं ब्रह्म त्वं जीवश्च बिम्बप्रति-

बिम्बरूपः । चार्थे वा शब्दः । मिथः परस्परं मिलितः सन्नेकरूपोऽस्मि । "एकमेवाऽद्वितीयम्" इति श्रुतेः ।

संकल्प से गुरू चेला दोनौ तुमने पाया है ।
निर्विकल्प होय तो गुरुचेला हम तुम दोनौ हम ही हैं ॥

संकल्पमात्रमनुसृत्य गुरुश्च शिष्यः
शब्दद्वयेन भवतोऽत्र विभागभाजौ ।
स्यान्निर्विकल्पपदता यदि दैवयोगा-
च्छिष्यो गुरुस्त्वमहमादि सदाऽहमस्मि १९

सङ्कल्पेति । सङ्कल्पः, एकोऽहं बहुः स्यामित्येवंरूपः । गुरुश्चित्स्वरूपः शिष्यश्चिदाभासरूपः अत्र प्रवाहद्वये विभागभाजौ पृथङ्नामानौ । निर्विकल्पपदमसंप्रज्ञातसमाधिः ।

मन के संकल्प को मान लेकर
शरीर व आत्मा पाया है ।
जड़ शरीर व चेतन आत्मा
माया ब्रह्म तो वही है ॥

अध्यस्य मोहवशतोऽत्र मनोविकल्पा-
नात्मा शरीरमिति भेदविशिष्टसत्ता ।
मायाभिधं गदितमस्ति जडं शरीरं
ब्रह्माभिधं भवति चेतनमात्मतत्त्वम् ॥२०॥

अधीति। मोहवशतो विद्याद्वयसङ्गवशात्। उक्तञ्च भागवते-"विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्। बन्धमोक्षकरी आद्ये मायया मे विनिर्मिते" इति। गीतायामपि—"मोहजालसमावृताः" इति। मनोविकल्पान्मनः सङ्कल्पान्। अध्यस्याऽऽत्मनि। अहमस्य कर्मणः कर्तेत्येवंरूपेणेत्यर्थः। "एवं पराभिध्यानेन कर्तृत्वं प्रकृतेः पुमान्। कर्मसु क्रियमाणेषु गुणैरात्मनि मन्यते" इति तृतीयस्कन्धोक्तेः। आत्मा शरीरम्—अस्यैव विवरणं मायाभिधमित्यादि।

शरीर व आत्मा छोड़कर
जो परमात्मा को पाया है।
निर्विकल्प समाधी में वह
आप ही आपको पाया है॥

हंसश्च सोऽहमिति यः क्रमतो विहाय
संप्राप्नुयादुपरि तत्परमात्मतत्त्वम्।
आत्मस्वरूपमधिगच्छति निर्विकल्पे
योगी स्थितो यदि विलीनमनाःसमाधौ। २१।

हंस इति। हंसो जडप्रवाहः। सोऽहं चैतन्यप्रवाहः। विहाय उपरि, आज्ञाचक्रादुपरि सहस्रारप्रवाहे। निर्विकल्पे समाधौ, इत्यन्वयः। अधिगच्छति प्राप्नोति।

तीन गुण को मान लेकर
आप ही आपको फँसाता है।
निर्विकल्प से निर्गुण होय जब
तब कौन किसको फँसाता है॥

संकल्पतः प्रकृतिजेन गुणत्रयेण
बध्नात्ययं बत मुधा स्वयमात्मना स्वम् ।
तन्निर्विकल्पपदमेत्य यदाऽगुणः स्याद्
बध्नाति कः कमिह केवलमात्मसत्त्वात् २२

सङ्कल्पेति । प्रकृतिजेन प्रकृतिकार्येण गुणत्रयेण सत्त्वरजस्तमोरूपेण । बतेत्याश्चर्ये । अयं जीवः स्वयमात्मना स्वमात्मानं मुधा मिथ्यैव सङ्कल्पतो बध्नाति न तु वस्तुतः । सुषुम्नायां सत्त्वगुणः । पिङ्गलायां रजोगुणः । इडायां तमोगुणः । जीवस्तु पिङ्गलायामित्यवधेयम् । यदा निर्विकल्पपदं प्राप्याऽगुणो गुणसंबन्धशून्यो निर्गुणस्तदा केवलम् । आत्मसत्त्वाद्धेतोः । कः कं बध्नाति । न कमपीत्यर्थः । "आत्मावास्यमिदं" इति भागवतोक्तेः ।

मन ही का संकल्प है सब
मन लय होय तो कुछ भी नहीं है ।
निर्विकल्प समाधी में
आप ही आप अकेला है ॥

संकल्प एष मनसोऽस्ति विकल्परूपो
लीने मनस्यखिलवस्तु भवेद्विलीनम् ।
योगी स्थितो यदि कथञ्चन निर्विकल्पे
स्वात्मैव सर्वमिदमस्ति जगत्समाधौ ॥२३॥

सङ्कल्प इति । एष विकल्परूपो जड़चैतन्यरूपः । मनसः ।

रजोगुणात्मिकाया इच्छाशक्तिप्रधानायाश्चिच्छक्तेरित्यर्थः। सङ्कल्पः कल्पना। मनसि लीने सत्यखिलं वस्तु विलीनं तिरोहितम्। योगश्चित्तवृत्तिनिरोधः सोऽस्याऽस्तीति योगी। कथञ्चनेत्यनेन तस्य दुर्लभत्वं सूचितम्। "यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" इति गीतोक्तेः। निर्विकल्पे समाधौ, आज्ञाचक्रादुपरि सहस्रारचक्रप्रवाहे यदि स्थितस्तर्हि सर्वं जगत्स्वात्मैव। "आत्मैवेदं जगत्सर्वं" इति श्रुतेः।

**वही आप तो सच्चिदानन्द परब्रह्म तो वही है।**
**संकल्प से गुरुचेला हम तुम एक ही परब्रह्म है॥**

**सच्चित्सुखात्मकमनादि परं यदेकं**
**ब्रह्मैव तत्त्वमसि तस्य सदैव सत्त्वात्।**
**शिष्यो गुरुस्त्वमहमित्यभिकल्प्य भेदो**
**ब्रह्मैकमेव सकलं मिथुनं परं तत्॥२४॥**

सच्चिदिति। सच्चित्सुखस्वरूपं, अनादि यदेकं परंब्रह्म तदेव त्वमसि। कथमित्याशयेनाह-तस्येति। तस्य ब्रह्मणः सदैवेत्यनेन कालत्रयाबाध्यत्वं सूचितम्। सत्त्वात्, अणुप्रविष्टचैतन्यत्वात् "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। त्वमहमिति मिथुनं द्वयं संकल्प्य भेदव्यवहारो भवति। वस्तुतः सकलं तदेकं परंब्रह्मैवेत्यन्वयः।

**श्यामा ही तो गुरु हैं**
**और ॐकार उनका चरन है।**
**प्राण मन से चरन धरिके**
**तुमको भव जल पार उतरना है॥**

श्यामा गुरुर्भवति तस्य गुरु र्गुरूणा-
मोंकार एव चरणो दिवि वर्तमानः।
प्राणैश्च शुद्धमनसा चरणं गृहीत्वा
पारं प्रयाहि भवसागरमध्यतस्त्वम् ॥२५॥

श्यामेति। गुरूणां बाह्यगुरूणामपि गुरुः श्यामा चिच्छक्तिर्गुरुः तस्य गुरोर्दिवि महाकाशे। मायाचक्रादुपर्याज्ञाचक्रप्रवाहे, इत्यर्थः। वर्तमान ओङ्कारः प्रणव एव। नादबिन्दुरूप इत्यर्थः। "नमो नादात्मने तुभ्यं नमो बिन्दुकलात्मने" इति काशीखण्डोक्तेः। चरतीति चरणः। सोऽहंप्रवाहरूप इत्यर्थः। चरणं ज्ञानमार्गं। मुक्तिमार्गमित्यर्थः। सुषुम्नामार्गमिति यावत्। "मुक्तिमार्गं प्रदर्शयन" इति काशीखण्डोक्तेः। गृहीत्वाश्रित्य हे जीव भवसागरमध्यतः पारं प्रयाहि।

नारायणान्तस्य हरेः प्रसादात्
पद्यैर्विचित्रैरधिकाशि दिव्यैः।
सन्निर्विकल्पाख्यसमाधितत्त्वं
पौराणिकैर्लोकहितार्थमुक्तम् ॥ २६ ॥

नारायणेति। नारायणोऽन्ते यस्य तस्य, एवं भूतस्य हरेः। हरिनारायणस्येत्यर्थः। विचित्रैर्दिव्यैः पद्यैः। अधिकाशि काश्याम्। अव्ययीभावः। पौराणिकैरस्माभिः सन् योगिनां स्वरूपपरिचायकत्वाच्छ्रेष्ठो यो निर्विकल्पाख्योऽसंप्रज्ञातसमाधिस्तस्य तत्त्वं रहस्यं लोकहितार्थमुक्तम्। परिशिष्टांशे श्लोकानां साधारणतया सङ्गतिर्दर्शिता न त्वभिप्राय इति विवेचनीयम्।

---

ॐ

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

मा या

चित्र

# मायायन्त्र

परि चय

य त्र

भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥

भ. गी.
१८।६१

## ❀ प्रथम चित्र ❀



( गर्भावस्था )

## ❀ द्वितीय चित्र ❀



( भूमिष्ठावस्था )

## ❁ तृतीय चित्र ❁



( प्रथमदीक्षा )

## ❀ चतुर्थ चित्र ❀




( द्वितीयदीक्षा )

## पञ्चम चित्र




(तमोगुणप्रत्याहृत)

# षट चित्र



( रजोगुणप्रत्याहृत )

## ❀ सप्तम चित्र ❀




( सत्त्वगुणप्रत्याहृत )

## ❀ अष्टम चित्र ❀




संप्रज्ञात ( सविकल्प ) समाधि

## * चित्र परिचय *

---

### प्रथम चित्र—गर्भावस्था

( १ ) सहस्त्रार, सूर्यमण्डल, ब्रह्मरन्ध्र, वैकुण्ठ, विशुद्धसत्त्वात्मक चित्स्वरूप परंब्रह्म, महाकाल, सत् , चित् , आनन्द ॥

( २ ) विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म, महाकाल, सत् ॥

( ३ ) आज्ञाचक्र, हिरण्मयकोष, अग्निमण्डल, ब्रह्माण्ड, ब्रह्मद्वार, परंपद, त्रिवेणी, सुदर्शनचक्र दिव्यचक्षु, गवाक्षमण्डल, भ्रामरीगुहा ।

( ४ ) तामससत्त्वात्मक चित्तरूपी शिव, शब्द-ब्रह्म, इतरलिङ्ग, म प्रणव, सोऽहं, काल, साक्षी, तत् ।

( ५ ) मायाचक्र, चन्द्रमण्डल, पिण्ड, स्वः, स्वर्ग, स्वर्गद्वार, कालचक्र, दशमद्वार, द्यावाभूमि, त्रिकुटी ।

( ६ ) सत्त्वगुणात्मक अहङ्काररूपी विष्णु, बाणलिङ्ग, अ, ईश्वर, नियन्तृ, हंसः, ओं ॥

( ७ ) तमः, म, साम, शिव, प्राज्ञ, चन्द्र ॥

( ८ ) विशुद्धाख्य, आनन्दमयकोष, भुवः, मर्त्य ॥

( ९ ) रजः, उ, यजुः, ब्रह्मा, तैजस, सूर्य ॥

( १० ) अनाहत, ईश्वर, नियन्तृ, विज्ञानमयकोष ॥

( ११ ) सत्त्व, अ, ऋक्, विष्णु, विश्व, अग्नि।

( १२ ) मणिपूर, मनोमयकोष, सूर्यमण्डल, भूः, पाताल, जीव, नियम्य ॥

( १३ ) स्वाधिष्ठान, प्राणमयकोष ॥

( १४ ) मूलाधार, अन्नमयकोष ॥

( १५ ) राजससत्त्वात्मक मनोरूपी ब्रह्मा, स्वयंभूलिङ्ग उ. जीव ॥

( १६ ) आधारचक्र ॥

( १७ ) सुषुम्ना ॥

( १८ ) शुद्धसत्त्वात्मिका पराबुद्धिरूपा ज्ञानशक्तिप्रधाना ब्रह्मशक्ति अर्थात् चेतनशक्तिस्वरूपा भोगमाया, तारा ॥

( १९ ) सूक्ष्म ॥

( २० ) मात्रा, मध्यमा ॥

( २१ ) रजः, सूर्य, सरस्वती, ब्राह्मी ॥

( २२ ) ब्राह्मी, इच्छाशक्ति, मन, रजः, काली ॥

( २३ ) स्थूल + व्यञ्जन, पश्यन्ती ॥

( २४ ) वैष्णवी, ज्ञानशक्ति, बुद्धि, सत्त्व, तारा ॥

( २५ ) गौरी, क्रियाशक्ति, अहङ्कार, तमः त्रिपुरसुन्दरी ॥

( २६ ) सत्त्व, अग्नि, गङ्गा, वैष्णवी, विद्या ॥

( २७ ) तमोगुणात्मिका अहङ्काररूपा क्रिया-शक्तिप्रधाना मायाशक्ति अर्थात् जड़शक्तिस्वरूपा योगमाया, त्रिपुरसुन्दरी + इच्छाज्ञानक्रियात्मिका चिच्छक्तिस्वरूपा महामाया ॥

( २८ ) तमः, चन्द्र, यमुना, गौरी ॥

( २९ ) कारण ॥

( ३० ) स्वर, परा ॥

( ३१ ) रजोगुणात्मिका मनोरूपा इच्छाशक्ति-प्रधाना चिच्छक्तिस्वरूपा महामाया, काली ॥

( ३२ ) एकमेवाऽद्वितीयम्, महाकारण ॥

( ३३ ) विशुद्धसत्त्वात्मिका व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महा-माया, महाकाली, ललनाचक्र, कैवल्य ॥

---

## ❋ प्रथम चित्र रहस्य ❋

गर्भावस्था, विलोमगति, मायाशक्ति अर्थात् जड़शक्तिस्वरूपा योगमाया व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महामाया की एकात्मता,-लिङ्गत्रय का संस्थान, साक्षीस्वरूप से काल का अधिष्ठान, नियन्तृ नियम्यस्वरूप से ईश्वर व जीव का अवस्थान, मायाशक्ति के संग होने के कारण ब्रह्म को आत्मविस्मृति व विपर्ययवशतः जीवत्वभ्रम, ब्रह्मशक्ति का पतन माया शक्ति का अभ्युत्थान, बद्धावस्था, हंसः सोऽहं शब्द के साथ शिव शक्ति की गति। योगावस्था ॥

---

# * चित्र परिचय *

---

## द्वितीयचित्र–भूमिष्ठावस्था

( १ ) सहस्रार, सूर्यमण्डल, ब्रह्मरन्ध्र, वैकुण्ठ, विशुद्धसत्त्वात्मक चित्स्वरूप परंब्रह्म, महाकाल सत्, चित्, आनन्द।

( २ ) विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म, महाकाल, सत्।

( ३ ) आज्ञाचक्र, हिरण्मयकोष, अग्निमण्डल, ब्रह्माण्ड, ब्रह्मद्वार, परंपद,–रुद्रग्रन्थि, त्रिवेणी, सुदर्शनचक्र, गवाक्षमण्डल, भ्रामरीगुहा, दिव्यचक्षु,

( ४ )तामससत्त्वात्मक चित्तरूपी शिव, शब्द-ब्रह्म, इतरलिङ्ग, म, काल, साक्षी, प्रणव, सोऽहं, तत्॥

( ५ ) सरस्वती॥

( ६ ) मायाचक्र, चन्द्रमण्डल, स्वः, स्वर्ग, स्वर्गद्वार, विष्णुग्रन्थि, त्रिकुटी, दशमद्वार, कालचक्र, द्यावाभूमि।

( ७ ) पिङ्गला, यमुना॥

( ८ ) तमः, म, साम शिव, प्राज्ञ, चन्द्र ॥

( ६ ) सत्त्वगुणात्मक अङ्काररूपी विष्णु, ईश्वर, वाणलिङ्ग, अ, हंसः, ओं ॥

( १० ) विशुद्धाख्य, भुवः, मर्त्य, आनन्द-मयकोष ॥

( ११ ) सत्त्व, अ, ऋक्, विष्णु, विश्व, अग्नि ॥

( १२ ) अनाहत, विज्ञानमयकोष, ईश्वर, नियन्तृ ॥

( १३ ) रजः, उ, यजुः, ब्रह्मा, तैजस, सूर्य, ॥

( १४ ) मणिपूर, मनोमयकोष, भूः, पाताल, सूर्यमण्डल, जीव, नियम्य, तामिस्त्र ॥

( १५ ) स्वाधिष्ठान, प्राणमयकोष, अन्धतामिस्त्र ॥

( १६ ) मूलाधार, अन्नमयकोष, ब्रह्मग्रन्थि, रौरव ॥

( १७ ) राजससत्त्वात्मक मनोरूपी ब्रह्मा, जीव, स्वयंभूलिङ्ग, उ ॥

( १८ ) रजोगुणात्मिका विक्षेपशक्तिरूपा अविद्या ॥

( १९ ) आधारचक्र ॥

( २० ) दक्षिणावर्त, पिङ्गला, देवयान, रजः सूर्य, पुरुष ॥

( २१ ) सुषुम्ना ॥

( २२ ) वामावर्त, इडा, पितृयान, तमः, चन्द्र, प्रकृति ॥

( २३ ) शुद्धसत्त्वात्मिका परात्बुद्धिरूपा ज्ञान-शक्तिप्रधाना ब्रह्मशक्ति अर्थात् चेतनशक्तिस्वरूपा भोगमाया, तारा ।

( २४ ) रजः, सूर्य, सरस्वती, ब्राह्मी ॥

( २५ ) तमोगुणात्मिका आवरणशक्तिरूपा अविद्या ॥

( २६ ) सूक्ष्म ॥

( २७ ) मात्रा, अनुदात्त, ह्रस्व, सुदारा, मध्यमा ॥

( २८ ) सत्त्व, अग्नि, गंगा, वैष्णवी, विद्या-शक्ति ॥

( २९ ) ब्राह्मी, इच्छाशक्ति, मन, रजः, काली ॥

( ३० ) स्थूल ॥

( ३१ ) वैष्णवी, ज्ञानशक्ति, बुद्धि, सत्त्व, तारा ॥

(३२) व्यञ्जन, स्वरित प्लुत, उदारा, पश्यन्ती ॥

( ३३ ) गौरी, क्रियाशक्ति, अहङ्कार, तमः, त्रिपुरसुन्दरी ॥

( ३४ ) गंगा, इडा ॥

( ३५ ) तमोगुणात्मिका अहङ्काररूपा क्रिया-शक्तिप्रधाना मायाशक्ति अर्थात् जडशक्तिस्वरूपा योगमाया + इच्छाज्ञानक्रियात्मिका चिच्छक्ति, त्रिपुर सुन्दरी ॥

( ३६ ) कारण ॥

( ३७ ) स्वर, उदात्त, दीर्घ तारा, परा ॥

( ३८ ) तमः, चन्द्र, यमुना, गौरी ॥

( ३९ ) रजोगुणात्मिका मनोरूपा इच्छाशक्ति-प्रधाना चिच्छक्तिस्वरूपा महामाया, काली ।

( ४० ) महाकारण, एकमेवाऽद्वितीयम् ॥

( ४१ ) विशुद्धसत्त्वात्मिका व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महा-माया, चन्द्रमण्डल, महाकाली, ललनाचक्र, कैवल्य ॥

## ❋ द्वितीयचित्र रहस्य ❋

भूमिष्ठावस्था—रजोगुणवृद्धि, अविद्याप्रधान-गति, अवच्छिन्नगति, विलोमगति, विषमगति, दक्षिणावर्त पिङ्गला, वामावर्त इडा अर्थात् देवयान पितृयान में विषस्वरूप रजोगुणात्मक सूर्य तथा अमृतस्वरूप चन्द्र की गति, पिङ्गला और इडा नाड़ी में रजस्तमोगुणात्मिका अविद्याशक्ति की गति, इडा पिङ्गला सुषुम्नानाडिस्वरूपा गंगा यमुना व सरस्वती का प्रवाह, ग्रन्थिविभाग, अविद्यासंग से जीव का स्थूल देहात्मबोध, अज्ञानावस्था, अधम, तामस, शूद्रत्वावस्था, कलियुग, द्वैतबोध अन्योन्याभाव, पूर्णविस्मृति जड़बोध, संसारगति अपरा-गति, कर्म, मोहरात्रि, ज्ञानचक्षु निमीलित स्वर्गद्वार आवृत ॥

---

# *चित्र परिचय*

---

## तृतीयचित्र-प्रथम दीक्षा

( १ ) सहस्रार, सूर्यमण्डल, ब्रह्मरन्ध्र, वैकुण्ठ, विशुद्धसत्त्वात्मक चित्स्वरूप परं ब्रह्म, महाकाल, सत्, चित्, आनन्द ॥

( २ ) विशुद्धसत्त्वात्मक चित्स्वरूप पर ब्रह्म, महाकाल, सत्, ॥

( ३ ) आज्ञाचक्र, हिरण्ययकोष, अग्निमण्डल, ब्रह्मद्वार, परंपद, रुद्रग्रन्थि, त्रिवेणी, सुदर्शनचक्र भ्रामरीगुहा, दिव्यचक्षु, गवाक्षमण्डल ॥

( ४ ) तामससत्त्वात्मक चित्तरूपीशिव, म, इतरलिङ्ग, काल, साक्षी, प्रणव, सोऽहं, तत् ॥

( ५ ) सरस्वती ॥

( ६ ) मायाचक्र, चन्द्रमण्डल, स्वः, स्वर्ग, स्वर्ग-द्वार, विष्णुग्रन्थि, त्रिकुटी, कालचक्र, द्यावाभूमि, दशमद्वार ॥

( ७ ) गंगा, इडा ॥

( ८ ) तमः, म, साम, शिव, प्राज्ञ, चन्द्र ॥

( ९ ) सत्त्वगुणात्मक, अहङ्काररूपी विष्णु, अ, वाणलिङ्ग, ईश्वर, नियन्तृ, हंसः, ओं ॥

( १० ) विशुद्धाख्य, आनन्दमयकोष, भुवः, मर्त्य, ॥

( ११ ) सत्त्व, अ, ऋक्, विष्णु, विश्व, अग्नि ॥

( १२ ) अनाहत, विज्ञानमयकोष, ईश्वर, नियन्तृ ॥

( १३ ) रजः, उ, यजुः, ब्रह्मा, तैजस, सूर्य ॥

( १४ ) मणिपूर, मनोमयकोष, भूः, पाताल, सूर्यमण्डल, जीव, नियम्य, तामिस्र ॥

(१५) स्वाधिष्ठान, प्राणमयकोष, अन्धतामिस्र ॥

( १६ ) तमोगुणात्मिका आवरणशक्तिरूपा अविद्या ॥

( १७ ) वामावर्त, इडा, पितृयान, तमः, चन्द्र, प्रकृति ॥

(१८) मूलाधार, अन्नमयकोष, ब्रह्मग्रन्थि, रौरव ॥

( १९ ) राजसत्त्वात्मक मनोरूपी ब्रह्मा, उ, स्वयम्भूलिङ्ग, जीव ॥

( २० ) आधारचक्र ॥

( २१ ) सुषुम्ना ॥

( २२ ) शुद्धसत्त्वात्मिका पराबुद्धिरूपा ज्ञान-

शक्तिप्रधाना ब्रह्मशक्ति (अर्थात्) चेतनशक्तिस्वरूपा भोगमाया, तारा ॥

( २३ ) सूक्ष्म ॥

( २४ ) मात्रा, मध्यमा ॥

( २५ ) रजः, सूर्य, सरस्वती ब्राह्मी ॥

( २६ ) दक्षिणावर्त, पिङ्गला, देवयान, रजः, सूर्य, पुरुष ॥

( २७ ) रजोगुणात्मिका विक्षेपशक्तिरूपा अविद्या ॥

( २८ ) स्थूल ॥

( २९ ब्राह्मी, इच्छाशक्ति, मन, रजः, काली ॥

( ३० ) व्यञ्जन, पश्यन्ती ॥

( ३१ ) वैष्णवी, ज्ञानशक्ति, बुद्धि, सत्त्व, तारा ॥

( ३२ ) गौरी, क्रियाशक्ति, अहङ्कार, तमः, त्रिपुरसुन्दरी ॥

( ३३ ) सत्त्व, अग्नि, गंगा वैष्णवी ॥

( ३४ ) यमुना, पिङ्गला ॥

( ३५ ) तमोगुणात्मिका अहङ्काररूपा क्रिया-शक्तिप्रधाना मायाशक्ति (अर्थात्) जडशक्तिस्वरूपा योगमाया + इच्छाज्ञानक्रियात्मिका चिच्छक्ति, त्रिपुरसुन्दरी ॥

( ३६ ) स्वर, परा ॥

( ३७ ) कारण ॥

( ३८ ) तमः, चन्द्र, यमुना, गौरी ॥

( ३६ ) रजोगुणात्मिका मनोरूपा इच्छाशक्ति-प्रधाना चिच्छक्तिस्वरूपा महामाया, काली ॥

( ४० ) महाकारण, एकमेवाऽद्वितीयम् ॥

( ४१ ) विशुद्धसत्त्वात्मिका व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महा-माया, महाकाली, चन्द्रमण्डल, ललनाचक्र, कैवल्य ॥

---

## ❋ तृतीय चित्र रहस्य ❋

चत्तु वा क्रमदीक्षा, शक्तिसंचार, समगति, भूचरीमुद्रा, पश्वाचार, राजस, मध्यम, वैश्यत्वा-वस्था, जाग्रत्सुषुप्तावस्था, कर्मयोग, कर्म, विचार, कलियुग (अर्थात्) एक पाद धर्म व तीन पाद अधर्म "कलौ नामैव केवलं" नाम–ओं ( अर्थात् ) हंसः + सोऽहं ॥ धर्म चेतन शक्ति, अधर्म अचेतन शक्ति, अर्थात् ब्रह्मशक्ति व मायाशक्ति॥

---

# * चित्र परिचय *

---

## चतुर्थचित्र–द्वितीयदीक्षा

( १ ) सहस्रार, सूर्यमण्डल, ब्रह्मरन्ध्र, वैकुण्ठ, विशुद्धसत्त्वात्मक चित्स्वरूप परंब्रह्म, महाकाल, सत्, चित्, आनन्द ॥

( २ ) विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म, महाकाल, तुर्यातीत, सत्, ॥

( ३ ) आज्ञाचक्र, हिरण्मयकोष, अग्निमण्डल, ब्रह्मद्वार, परंपद, रुद्रग्रन्थि, तुर्यगा, द्वारिका। त्रिवेणी, सुदर्शनचक्र, गवाक्षमण्डल, भ्रामरीगुहा, दिव्यचक्षु।

( ४ ) तामससत्त्वात्मक चित्तरूपी शिव, म, इतरलिङ्ग, शब्दब्रह्म, काल, साक्षी, प्रणव, सोऽहं, तत्।

( ५ ) अथर्वण, अयमात्मा ब्रह्म ।

( ६ ) सरस्वती ॥

( ७ ) निषाद ॥

( ८ ) मायाचक्र, चन्द्रमण्डल, स्वः, स्वर्ग, स्वर्गद्वार, पदार्थभावना, विष्णु, वा हृदयग्रन्थि, वृन्दावन। कालचक्र, द्यावाभूमि, दशमद्वार, त्रिकुटी, ॥

( ९ ) धैवत ॥

( १० ) तमः, म, साम, शिव, प्राज्ञ, चन्द्र, तत्त्वमसि ॥

( ११ ) सत्त्वगुणात्मक अहङ्काररूपो विष्णु, ईश्वर, नियन्तृ, अ, वाणलिङ्ग, हंसः, ओं ॥

( १२ ) विशुद्धाख्य, आनन्दमयकोष, भुवः मर्त्य, असंसक्ति ॥

( १३ ) पिङ्गला, यमुना ॥

( १४ ) रजः, उ, यजुः, ब्रह्मा, तैजस, सूर्य, अहं ब्रह्मास्मि ॥

( १५ ) पञ्चम ॥

( १६ ) अनाहत, विज्ञानमयकोष, ईश्वर, नियन्तृ, सत्त्वापत्ति ॥

( १७ ) रजोगुणात्मिका विक्षेपशक्तिरूपा अविद्या ॥

( १८ ) मध्यम ॥

( १९ ) सत्त्व, अ, ऋक्, विष्णु, विश्व, अग्नि, प्रज्ञानमानन्दं ब्रह्म ॥

( २० ) दक्षिणावर्त, पिङ्गला, देवयान, रजः, सूर्य, पुरुष ॥

( २१ ) मणिपूर, मनोमयकोष, सूर्यमण्डल,

भूः, पाताल, जीव, नियम्य, तनुमानसा, तामिस्र, गोकुल ॥

( २२ ) गान्धार ॥

( २३ ) स्वाधिष्ठान, प्राणमयकोष, अन्धतामिस्र, विचारणा ॥

( २४ ) ऋषभ ॥

( २५ ) मूलाधार, अन्नमयकोष, ब्रह्मग्रन्थि, रौरव, शुभेच्छा ॥

( २६ ) राजससत्त्वात्मक मनोरूपी ब्रह्मा, जीव, उ, स्वयम्भूलिङ्ग ॥

( २७ ) षड्ज ॥

( २८ ) आधारचक्र ॥

( २९ ) सुषुम्ना ॥

( ३० ) शुद्धसत्त्वात्मिका पराबुद्धिरूपा ज्ञान शक्तिप्रधाना ब्रह्मशक्ति ( अर्थात् ) चेतनशक्ति स्वरूपा भोगमाया, तारा ॥

( ३१ ) सूक्ष्म ॥

( ३२ ) मात्रा, मध्यमा, अनुदात्त, ह्रस्व, मुदारा ॥

( ३३ ) रजः, सूर्य, सरस्वती, ब्राह्मी ॥

( ३४ ) ब्राह्मी, इच्छाशक्ति, मन, रजः, काली ॥

( ३५ ) स्थूल ॥

( ३६ ) सत्त्व, अग्नि, गंगा, वैष्णवी, विद्याशक्ति॥

( ३७ ) वैष्णवी, ज्ञानशक्ति, बुद्धि, सत्त्व, तारा ॥

( ३८ ) व्यञ्जन, स्वरित, प्लुत, उदारा, पश्यन्ती ॥

( ३९ ) गौरी, क्रियाशक्ति, अहङ्कार, तमः, त्रिपुरसुन्दरी ॥

( ४० ) वामावर्त, इडा, पितृयान, तमः, चन्द्र, प्रकृति ॥

( ४१ ) तमोगुणात्मिका आवरणशक्तिरूपा-अविद्या ॥

( ४२ ) इडा, गंगा ॥

( ४३ ) तमोगुणात्मिका अहङ्काररूपा क्रिया-शक्तिप्रधाना मायाशक्ति (अर्थात्) जडशक्तिस्वरूपा योगमाया + इच्छाज्ञानक्रियात्मिका चिच्छक्ति, त्रिपुरसुन्दरी ॥

( ४४ ) स्वर, परा, उदात्त, दीर्घ, तारा,

( ४५ ) तमः, चन्द्र, यमुना, गौरी ॥

( ४६ ) कारण ॥

( ४७ ) रजोगुणात्मिका मनोरूपा इच्छाशक्ति-प्रधाना चिच्छक्तिस्वरूपा महामाया, काली ॥

( ४८ ) महाकारण, एकमेवाऽद्वितीयम् ॥

( ४६ ) विशुद्धसत्त्वात्मिका व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महामाया, चन्द्रमण्डल, महाकाली, ललनाचक्र, कैवल्य ॥

---

## ❋ चतुर्थ चित्र रहस्य ❋

विलोमगति, ब्रह्मग्रन्थिभेद, सूर्यमण्डलभेद, संस्कार, अभिषेक, उपनयन, सावित्रीमन्त्रदीक्षा, वेदारम्भ, उपकुर्वाण(बालब्रह्मचर्य्य)प्रकाशब्रह्मचर्य्य, दक्षिणाचार, वीराचार, चांचरीमुद्रा, सावित्री, वा हंसमन्त्रजप, ओङ्कारोच्चारण, अकारात्मकऋग्वेदोच्चारण, शाक्त, कौल, श्रोत्रिय, अपरागति, कर्म, धारणा, जडवत्, वितर्कावस्था, जाग्रत्स्वप्नावस्था, क्षत्रियत्वावस्था, द्वापरयुग, श्रीकृष्णचैतन्यावतार, आदिलीला, मुक्तवेणी, दक्षिणायन, कृष्णागति, कर्मयोग, आरुरुक्षुः, प्रातःसन्ध्या, पितृतर्पण, "उत्तिष्ठत" द्वापर ( अर्थात् ) दोपादधर्म व. दोपाद अधर्म, महारात्रि, देवासुरसंग्राम, ( अर्थात् ) दैवीशक्ति व आसुरीशक्ति का संग्राम ( अर्थात् ) रजस्तमोगुणात्मिका विक्षेप व आवरणशक्तिरूपा अविद्याशक्ति तथा सत्त्वगुणात्मिका विद्याशक्ति का संग्राम, तमोगुणत्याग सालोक्यमुक्ति ॥

# * चित्र परिचय *

---

## पञ्चमचित्र–तमोगुण प्रत्याहृत

( १ ) सहस्रार, सूर्यमण्डल, ब्रह्मरन्ध्र, वैकुण्ठ, विशुद्धसत्त्वात्मक चित्स्वरूप परंब्रह्म, महाकाल, सत्, चित्, आनन्द ॥

( २ ) विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म, महाकाल, तुर्यातीत, सत् ॥

( ३ ) आज्ञाचक्र, हिरण्मयकोष, अग्निमण्डल, ब्रह्मद्वार, परंपद, रुद्रग्रन्थि, तुर्यगा, द्वारिका, त्रिवेणी, सुदर्शनचक्र, भ्रामरीगुहा, दिव्यचक्षु, गवाक्षमण्डल ॥

( ४ ) तामससत्त्वात्मक चित्तरूपी शिव, म, इतरलिङ्ग, शब्दब्रह्म, काल, साक्षी, प्रणव, सोऽहं, तत् ॥

( ५ ) अथर्वण, अयमात्मा ब्रह्म ॥

( ६ ) सरस्वती ॥

( ७ ) मायाचक्र, चन्द्रमण्डल, स्वः, स्वर्ग, स्वर्गद्वार, विष्णुग्रन्थि, बृन्दावन, कालचक्र, द्यावाभूमि, दशमद्वार, त्रिकुटी, ॥

( ८ ) पिङ्गला, यमुना ॥

( ९ ) तमः, म, साम, शिव, प्राज्ञ, चन्द्र, तत्त्वमसि ॥

( १० ) सत्त्वगुणात्मक अहङ्काररूपी विष्णु, अ, वाणलिङ्ग, ईश्वर, नियन्तृ, हंसः, ओं ॥

( ११ ) विशुद्धाख्य, आनन्दमयकोष, भुवः, मर्त्य, ॥

( १२ ) रजः, उ, यजुः, ब्रह्मा, तैजस, सूर्य, अहं ब्रह्मास्मि ॥

( १३ ) अनाहत, विज्ञानमयकोष, ईश्वर, नियन्तृ ॥

( १४ ) रजोगुणात्मिका विक्षेपशक्तिरूपा अविद्या ॥

( १५ ) दक्षिणावर्त, पिङ्गला, देवयान, रजः, सूर्य, पुरुष ॥

( १६ ) मणिपूर, मनोमयकोष, सूर्यमण्डल, भूः, पाताल, जीव, नियम्य, तामिस्र, गोकुल ॥

( १७ ) स्वाधिष्ठान, प्राणमयकोष, अन्धतामिस्र ॥

( १८ ) मूलाधार, अन्नमयकोष, रौरव ॥

( १९ ) राजससत्त्वात्मक मनोरूपी ब्रह्मा, उ, स्वयंभूलिङ्ग, जीव ॥

( २० ) आधारचक्र ॥

( २१ ) सुषुम्ना ॥

( २२ ) शुद्धसत्त्वात्मिका पराबुद्धिरूपा ज्ञान-शक्तिप्रधाना ब्रह्मशक्ति (अर्थात्) चेतनशक्तिस्वरूपा भोगमाया, तारा ॥

( २३ ) सूक्ष्म ॥

( २४ ) मात्रा, मध्यमा ॥

( २५ ) रजः, सूर्य, सरस्वती, ब्राह्मी ॥

( २६ ) ब्राह्मी, इच्छाशक्ति, मन, रजः, काली ॥

( २७ ) वैष्णवी, ज्ञानशक्ति, बुद्धि, सत्त्व, तारा ॥

( २८ ) स्थूल ॥

( २९ ) सत्त्वगुणात्मिका विद्या ॥

( ३० ) व्यञ्जन, पश्यन्ती ॥

( ३१ ) गौरी, क्रियाशक्ति, अहङ्कार, तमः, त्रिपुरसुन्दरी ॥

( ३२ ) सत्त्व, अग्नि, गंगा, वैष्णवी ॥

( ३३ ) तमोगुणात्मिका अहङ्काररूपा क्रिया-शक्तिप्रधाना मायाशक्ति ( अर्थात् ) जडशक्तिस्वरूपा योगमाया + इच्छाज्ञानक्रियात्मिका चिच्छक्ति, त्रिपुरसुन्दरी ॥

( ३४ ) स्वर, परा ॥

( ३५ ) तमः, चन्द्र, यमुना, गौरी ॥

( ३६ ) कारण ॥

( ३७ ) रजोगुणात्मिका मनोरूपा इच्छाशक्तिप्रधाना चिच्छक्तिस्वरूपा महामाया, काली ॥

( ३८ ) महाकारण, एकमेवाऽद्वितीयम् ॥

( ३९ ) विशुद्धसत्त्वात्मिका व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महामाया, महाकाली, चन्द्रमण्डल, ललनाचक्र, कैवल्य ॥

---

## ❋ पञ्चम चित्र रहस्य ❋

अकारात्मक ऋग्वेदोच्चारित, उकारात्मक यजुर्वेदोच्चारण, प्रातः सन्ध्या, तथा ब्रह्मोपसना समाप्त, मध्याह्नसन्ध्या व विष्णु उपासना प्रारम्भ, पितृतर्पण समाप्त, ऋषितर्पणप्रारम्भ, प्रथमदण्डत्याग, द्वितीयदण्ड ग्रहण, तमोगुण का त्याग, चांचरीमुद्रा, आनन्दब्रह्मचर्य्य ॥

---

# * चित्र परिचय *

---

## षष्ठ चित्र—रजोगुण प्रत्याहृत

(१) सहस्त्रार, सूर्य्यमण्डल, वैकुण्ठ, ब्रह्मरन्ध्र, विशुद्धसत्त्वात्मक चित्स्वरूप परंब्रह्म, महाकाल, सत्, चित्, आनन्द,

(२) विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म, महाकाल, तुर्यातीत, सत् ॥

( ३ ) आज्ञाचक्र, हिरण्मयकोष, अग्निमण्डल, ब्रह्मद्वार, परंपद, रुद्रग्रन्थि, तुर्यगा, द्वारिका, दिव्यचक्षु, त्रिवेणी, सुदर्शनचक्र, गवाक्षमण्डल, भ्रामरीगुहा ॥

( ४ ) तामससत्त्वात्मक चित्तरूपी शिव, म, इतरलिङ्ग, शब्दब्रह्म, काल, साक्षी, प्रणव, सोऽहं, तत् ॥

( ५ ) अथर्वण, अयमात्मा ब्रह्म ॥

( ६ ) सरस्वती ॥

( ७ ) मायाचक्र, चन्द्रमण्डल, स्वः, स्वर्ग, स्वर्गद्वार, विष्णुग्रन्थि, वृन्दावन, त्रिकुटी, दशमद्वार, कालचक्र, द्यावाभूमि ॥

( ८ ) तमः, म, साम, शिव, प्राज्ञ, चन्द्र, तत्त्वमसि ॥

( ९ ) सत्त्वगुणात्मक अहङ्काररूपी विष्णु, अ, वाणलिङ्ग, ईश्वर, नियन्तृ, हंसः, ओं ॥

( १० ) विशुद्धाख्य, आनन्दमयकोष, भुवः, मर्त्य ॥

( १० ) अनाहत, विज्ञानमयकोष, ईश्वर, नियन्तृ ॥

( १२ ) मणिपूर, मनोमयकोष, सूर्यमण्डल, भूः, पाताल, जीव, नियम्य, तामिस्र, गोकुल ॥

( १३ ) स्वाधिष्ठान, प्राणमयकोष, अन्धतामिस्र ॥

( १४ मूलाधार, अन्नमयकोष, रौरव ॥

( १५ ) राजससत्त्वात्मक मनोरूपी ब्रह्मा, उ, स्वयम्भूलिङ्ग, जीव ॥

( १६ ) आधारचक्र ॥

( १७ ) सुषुम्ना ॥

( १८ ) शुद्धसत्त्वात्मिका पराबुद्धिरूपा ज्ञानशक्तिप्रधाना ब्रह्मशक्ति (अर्थात्) चेतनशक्तिस्वरूपा भोगमाया, तारा ॥

( १६ )सूक्ष्म ॥

( २० मात्रा, मध्यमा ॥

( २१ ) रजः, सूर्य, सरस्वती, ब्राह्मी ॥

( २२ ) ब्राह्मी, इच्छाशक्ति, मन, रजः, काली ॥

( २३ ) वैष्णवी, ज्ञानशक्ति, बुद्धि, सत्त्व, तारा ॥

( २४ ) गौरी, क्रियाशक्ति, अहङ्कार, तमः, त्रिपुरसुन्दरी ॥

( २५ ) व्यञ्जन, पश्यन्ती ॥

( २६ ) सत्त्व, अग्नि, गंगा, वैष्णवी,

( २७ ) स्थूल ॥

( २८ ) तमोगुणात्मिका अहङ्काररूपा क्रिया-शक्तिप्रधाना मायाशक्ति (अर्थात् ) जडशक्तिस्वरूपा योगमाया + इच्छाज्ञानक्रियात्मिका चिच्छक्ति, त्रिपुरसुन्दरी ॥

( २९ ) स्वर, परा ॥

( ३० ) तमः, चन्द्र, यमुना, गौरी ॥

( ३१ ) कारण ॥

( ३२ ) रजोगुणात्मिका मनोरूपा इच्छाशक्ति-प्रधाना चिच्छक्तिस्वरूपा महामाया, काली ॥

( ३३ ) महाकारण, एकमेवाऽद्वितीयम् ॥

( ३४ ) विशुद्धसत्त्वात्मिका व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महामाया, महाकाली, ललनाचक्र, कैवल्य ॥

---

## ❋ षष्ठ चित्र—रहस्य ❋

उकारात्मक यजुर्वेदोच्चारित, मकारात्मक सामवेदोच्चारण, मध्याह्नसन्ध्या तथा विष्णूपासनासमाप्त, सायंसंध्या व रुद्रोपासनाप्रारम्भ, देवतर्पणसमाप्त, ऋषितर्पणप्रारम्भ, द्वितीयदण्डत्याग, तृतीयदण्डग्रहण, रजोगुणप्रत्याहृत, रजोगुणात्मिका अविद्याशक्ति तथा सत्त्वगुणात्मिका विद्याशक्ति की एकात्मता, चन्द्रसूर्यसमागम, विषामृतसंयोग, अगोचरीमुद्रा, त्रेतायुग, कालरात्रि, चैतन्यब्रह्मचर्य्य, त्रेतायुग ( अर्थात् ) तीनपाद धर्म व एकपाद अधर्म ॥

---

# *चित्र परिचय*

---

## सप्तमचित्र-सत्त्वगुण प्रत्याहृत

( १ ) सहस्त्रार, सूर्यमण्डल, ब्रह्मरन्ध्र, वैकुण्ठ, विशुद्धसत्त्वात्मक चित्स्वरूप परंब्रह्म. महाकाल, सत्, चित्, आनन्द ॥

( २ ) विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म, महाकाल, तुर्यातीत सत् ॥

( ३ ) आज्ञाचक्र, हिरण्ययकोष, अग्निमण्डल, ब्रह्मद्वार, परंपद, रुद्रग्रन्थि, तुर्यगा, द्वारिका, त्रिवेणी, सुदर्शनचक्र, दिव्यचक्षु, गवाक्षमण्डल, भ्रामरीगुहा॥

( ४ ) तामससत्त्वात्मक चित्तरूपी शिव, म, इतरलिङ्ग, शब्दब्रह्म, काल, साक्षी, प्रणव, सोऽहं, तत् ॥

( ५ ) अथर्वण, अयमात्मा ब्रह्म ॥

( ६ ) इडा, असी ॥

( ७ ) सुषुम्ना, गंगा, अविमुक्तवाराणसी ॥

( ८ ) मायाचक्र, चन्द्रमण्डल, स्वः, स्वर्ग, स्वर्गद्वार, बृन्दावन, त्रिकुटी, कालचक्र, द्यावाभूमि, दशमद्वार ॥

( ९ ) विशुद्धाख्य आनन्दमयकोष, भुवः मर्त्य ॥

( १० ) अनाहत, विज्ञानमयकोष ।

( ११ ) मणिपूर, मनोमयकोष, सूर्यमण्डल, भूः, पाताल, गोकुल ॥

( १२ ) स्वाधिष्ठान, प्राणमयकोष ॥

( १३ ) मूलाधार, अन्नमयकोष ॥

( १४ ) राजससत्त्वात्मक मनोरूपी ब्रह्मा, उ, स्वयम्भूलिङ्ग, जीव ॥

( १५ ) आधार चक्र ॥

( १६ ) सुषुम्ना ॥

( १७ ) शुद्धसत्त्वात्मिका पराबुद्धिरूपा ज्ञान-शक्तिप्रधाना ब्रह्मशक्ति ( अर्थात् ) चेतनशक्ति स्वरूपा भोगमाया, तारा ॥

( १८ ) माया, मध्यमा ॥

( १९ ) रजः, सूर्य, सरस्वती, ब्राह्मी ॥

( २० ) सूक्ष्म ॥

( २१ ) तमोगुणात्मिका अहङ्काररूपा क्रिया-

शक्तिप्रधाना मायाशक्ति (अर्थात्) जडशक्तिस्वरूपा योगमाया + इच्छाज्ञानक्रियात्मिका चिच्छक्ति, त्रिपुरसुन्दरी ॥

( २२ ) वरुणा, पिङ्गला ॥

( २३ ) स्वर, परा ॥

( २४ ) कारण ॥

( २५ ) तमः, चन्द्र, यमुना, गौरी ॥

( २६ ) रजोगुणात्मिका मनोरूपा इच्छाशक्ति-प्रधाना चिच्छक्तिस्वरूपा महामाया, काली ॥

( २७ ) महाकारण, एकामेवाऽद्वितीयम् ॥

( २८ ) विशुद्धसत्त्वात्मिका व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महामाया, महाकाली, चन्द्रमण्डल, ललनाचक्र, कैवल्य ॥

---

## ❁ सप्तम चित्र रहस्य ❁

मकारात्मक सामवेदोच्चारित, सायंसंध्या व रुद्र-उपासनासमाप्त, ऋषितर्पणसमाप्त, तृतीयदण्डत्याग, प्राणत्याग, रजोगुणत्याग, अविद्यासंगत्याग, स्थूल-देहत्याग, कर्मकाण्ड व प्रवृत्तिमार्गत्याग, संसारत्याग,

विष्णु वा हृदयग्रन्थिभेद, शिवशक्तिसमागम, उत्तरायण, शुक्ला गति, युक्तवेणी, पूर्णाभिषेक, स्पर्शदीक्षा, कुलीन, नवजीवन, सात्त्विक, उत्तम, सायुज्यमुक्ति, वानप्रस्थ, गायत्रीमन्त्रदीक्षा, अजपाजप, सोऽहं-मन्त्रजप, प्रणवोच्चारण, दिव्याचार, खेचरीमुद्रा, विरजाहोम, सत्त्वगुणप्रत्याहृत, चन्द्रमण्डलभेद, जीव ब्रह्मकी एकता, कारणशरीर में गति, परागति, तत्त्वगति, अकर्म, योगारूढ, युक्तावस्था, ब्राह्मणत्वावस्था, ज्ञानावस्था, ध्यानावस्था, सिद्धावस्था, प्रलय, काशीप्राप्ति, शैव, "जाग्रत", उन्मत्तवत्, तपश्चर्य्या, मध्यलीला, विशिष्टाद्वैत, प्रध्वंसाभाव, ब्रह्मदण्डग्रहण, अथवा गुरु के आदेशानुसार समावर्तनान्तर गार्हस्थ्याश्रम, ज्ञानयोग, सत्ययुग (अर्थात्) चतुष्पाद धर्म, वामाचार, मायानिद्रा का अवसान, प्रातरुत्थान, संसारस्वप्नभंग, अरुणोदय, लोहितवर्ण, ज्ञानचक्षुउन्मीलित, स्वर्गद्वार, अपावृत, ब्राह्ममुहूर्त, उषायात्रा, जडबोधाभाव, चित्सत्ता की उपलब्धि, ज्ञान, सत्त्वगुण में गति, नैष्ठिक वा स्वरूप ब्रह्मचर्य्य, जाग्रतावस्था ॥

---

# * चित्र परिचय *

---

## अष्टमचित्र—सम्प्रज्ञात वा सविकल्पसमाधि

( १ ) सहस्रार, सूर्यमण्डल, विशुद्धसत्त्वात्मक चित्स्वरूप परंब्रह्म, ब्रह्मरन्ध्र, वैकुण्ठ, महाकाल, सत्, चित्, आनन्द ॥

( २ ) विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म, महाकाल, परमात्मा, तुर्यातीत, सत् ॥

( ३ ) आज्ञाचक्र, हिरण्मयकोष, अग्निमण्डल, ब्रह्मद्वार, परंपद, बिन्दु, तुर्य्यगा, गंगोत्री, द्वारिका, सुदर्शनचक्र, त्रिवेणी, दिव्यचक्षु, गवाक्षमण्डल, भ्रामरीगुहा, शुद्धसत्त्वात्मकचित्तरूपी ब्रह्म, तपः ॥

( ४ ) नाद ॥

( ५ ) मायाचक्र, चन्द्रमण्डल, स्वः, स्वर्ग, स्वर्गद्वार, हरिद्वार, बृन्दावन, मन्दाकिनी, पदार्थभावना, कालचक्र, त्रिकुटी, दशमद्वार, द्यावाभूमि ॥

( ६ ) सत्त्व, (परासत्त्व) विश्व, अ, ऋक्, ॥

( ७ ) विशुद्धाख्य, भुवः, मर्त्य, अलकनन्दा, असंसक्ति, जनः ॥

( ८ ) राजससत्त्व, (अतिसत्त्व) तैजस, उ, यजुः

( ९ ) अनाहत, सत्त्वापत्ति, महः ॥

( १० ) मणिपूर, भूः, पाताल, भोगवती, गोकुल, तनुमानसा, स्वः ॥

( ११ ) तामससत्त्व, (सत्त्व) प्राज्ञ, म साम ॥

( १२ ) स्वाधिष्ठान, विचारणा, भुवः ॥

( १३ ) मूलाधार, शुभेच्छा, भूः ॥

( १४ ) आधारचक्र ॥

( १५ ) सुषुम्ना ॥

( १६ ) रजोगुणात्मिका मनोरूपा इच्छाशक्ति-प्रधाना चित्शक्तिस्वरूपा महामाया, काली, जीवात्मा, ओं, सोहं ॥

( १७ ) षड्ज ॥

( १८ ) ऋषभ ॥

( १९ ) गान्धार ॥

( २० ) मध्यम ॥

( २१ ) पञ्चम ॥

( २२ ) धैवत ॥

( २३ ) तमोगुणात्मिका अहङ्काररूपा क्रिया-शक्तिप्रधाना मायाशक्ति (अर्थात्) जडशक्तिस्वरूपा योगमाया, त्रिपुरसुन्दरी ॥

( २४ ) निषाद ॥

( २५ ) शुद्धसत्त्वात्मिका पराबुद्धिरूपा ज्ञानशक्तिप्रधाना ब्रह्मशक्ति (अर्थात्) चेतनशक्तिस्वरूपा भोगमाया, तारा ॥

( २६ ) महाकारण, एकमेवाऽद्वितीयम् ॥

( २७ ) विशुद्धसत्त्वात्मिका व त्रिगुणात्मिका इच्छाज्ञानक्रियाशक्तिरूपा चिच्छक्तिस्वरूपा महामाया, महाकाली, चन्द्रमण्डल, ललनाचक्र, गोमुखी, कैवल्य ॥

---

## ❋ अष्टम चित्र रहस्य ❋

शुद्धसत्त्वात्मिका पराबुद्धिरूपा ज्ञानशक्ति-प्रधाना ब्रह्मशक्ति अर्थात् चेतनशक्तिस्वरूपा भोग-माया स्वस्थान में प्रत्याहृत तथा उस भोग माया के संग से ब्रह्मका जीवत्व व संसार भ्रम का अवसान, स्वरूपावस्थिति, ब्राह्मीस्थिति, परमपदलाभ, सत्त्व-गुणत्याग, गुणातीत, तुर्य्यावस्था, ब्रह्मत्वावस्था, योगावस्था, मुक्तावस्था, शुद्धज्ञानावस्था, अन-वच्छिन्न ओंकार की गति, अद्वैतबोध सन्यास, भक्तियोग, वैष्णव, अन्तलीला, पिशाचवत्, प्रध्वं-साभाव, "प्राप्य वरान् निबोधत" सम्प्रज्ञात वा सविकल्पसमाधि, सहजावस्था, बौद्ध, शुद्धसत्त्व में स्थिति, सूर्य्योदय, शुक्लवर्ण, अग्निमण्डल भेद, शाम्भवी मुद्रा, रुद्रग्रन्थिभेद, सारूप्यमुक्ति, प्रभास-यज्ञ, पूर्णाहुति, ॐ शान्तिः ॐ शान्तिः ॐ शान्तिः॥

——— ———

# *चित्र परिचय*

---

## नवम चित्र–असम्प्रज्ञात वा निर्विकल्प समाधि

(१) सहस्रार, सूर्य्यमण्डल, विशुद्धसत्त्वात्मक चित्स्वरूप परंब्रह्म, ब्रह्मरन्ध्र, महाकाल, सत्, चित्, आनन्द, वैकुण्ठ ॥

( २ ) विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म, महाकाल, तुर्य्यातीत, सत् ॥

( ३ ) आज्ञाचक्र ॥

( ४ ) मायाचक्र ॥

( ५ ) विशुद्धाख्य ॥

( ६ ) अनाहत ॥

( ७ ) मणिपूर ॥

( ८ ) स्वाधिष्ठान ॥

( ९ ) मूलाधार ॥

( १० ) आधारचक्र ॥

( ११ ) सुषुम्ना ॥

( १२ ) एकमेवाऽद्वितीयम्, महाकारण ॥

( १३ ) विशुद्धसत्त्वात्मिका व इच्छाज्ञान-क्रियात्मिका चिच्छक्तिस्वरूपा महामाया, चन्द्र-मण्डल, महाकाली, ललनाचक्र, कैवल्य ॥

---

## ❋ नवम चित्र रहस्य ❋

विशुद्धसत्त्वात्मक चित्स्वरूप परब्रह्म के साथ त्रिगुणात्मिका इच्छाज्ञानक्रियात्मिका चिच्छक्ति-स्वरूपा महामाया की एकता, चित् और चिदाभास एकात्मक, जीवनमुक्ति, मोक्षयोग, तुर्य्यातीत, अत्यन्ताभाव, द्वैताद्वैतविवर्जितम्, असम्प्रज्ञात वा निर्विकल्पसमाधि, जीवात्मा व परमात्मा की एकता, अवधूत, विज्ञानावस्था, परमहंस, परिव्राजक, विकर्म, विशुद्धज्ञानावस्था ॥

---

## प्रथमदीक्षा अर्थात् चक्षुदीक्षा वा शक्तिसंचार का परिणाम।

—o—

मूलाधार चक्र से मणिपूर चक्र तक गति समाप्त।

—o—

सूर्यमण्डलभेद, ब्रह्मग्रन्थिभेद, जाग्रत्स्वप्नावस्था, क्षत्रियस्वावस्था, कर्मयोग, हंसमन्त्रजप, सावित्रीमन्त्रोच्चारण, ब्रह्मचर्य्याश्रम, तमोगुणत्याग, सालोक्यमुक्ति, अशुद्धसत्त्वात्मिका विद्याशक्ति का सङ्ग ग्रहण, शाक्त, श्रोत्रिय, धारणावस्था, आरुरुक्षुः "उत्तिष्ठत"।



## द्वितीयदीक्षा अर्थात् मन्त्रदीक्षा वा शक्तिरुत्थान का परिणाम।

—o—

मणिपूर से मायाचक्र तक गति समाप्त।

—o—

चन्द्रमण्डलभेद, विष्णुग्रन्थिभेद, जाग्रतावस्था, ब्राह्मणस्वावस्था, ज्ञानयोग, सोहंमन्त्रजप, गायत्री-

पुरश्चरण, वानप्रस्थाश्रम, रजोगुणत्याग, सायुज्य-मुक्ति, सत्त्वगुणात्मिका विद्याशक्ति के संग में गति, शैव, कौल, ध्यानावस्था, योगारूढ़, "जाग्रत"।



## तृतीयदीक्षा अर्थात् स्पर्शदीक्षा वा शिवशक्ति-समागम का परिणाम।



### मायाचक्र से आज्ञाचक्र तक गति समास।



अग्निमण्डलभेद, रुद्रग्रन्थिभेद, तुर्य्यावस्था, ब्रह्मत्वावस्था, भक्तियोग, ब्राह्मीस्थिति, विश्राम, सन्यासाश्रम, सत्त्वगुणत्याग, सारूप्यमुक्ति, शुद्ध-सत्त्वात्मिका पराविद्या के संग में स्थिति, "वैष्णव, कुलीन, सम्प्रज्ञातसमाधि, योगी, "प्राप्य वरान्निबोधत"।

